ॐ

## ।। श्री शृङ्गेरी श्रीजगद्गुरुमहासंस्थानम् ।।

मुद्रा

श्रीमत्परमहंसपरिव्राचकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायाम प्रत्याहार धारणाध्यानसमाध्यष्टाङ्गयोगानिष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्ग प्रवर्तक सर्वतन्त्र-स्वतन्त्रादिराजधानी विद्यानगर महाराजधानी कर्णाटकसिंहासन प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थस्वामि गुरुकरकमलसञ्जात

### ।। श्रीजगद्गुरु शृङ्गेरी श्रीमद्भारतीतीर्थस्वामिभिः ।।

अस्मदत्यन्तप्रियशिष्य श्रीपरमेश्वरशर्म विषये नारायणस्मरणपुरस्सर विरचिता आशिषस्समुल्लसन्तु।

भवन्तः वेदमधीत्य शिष्यानध्यापयन्तः अधुना लोकानामुपकाराय अत्यावश्यक वेदभागान् स्थूलाक्षरैः सस्वरं प्रकाशयन्तीति विदित्वा भृशं मोदामहे। अत्र हि रुद्रक्रमः महान्यासः उदकशान्तिरित्यादयः प्रकाशिता ये सर्वेषामत्यन्तमावश्यकाः। भवदीयोऽयमुद्यमः धर्मश्रद्धालूनामास्तिकानां प्रशंसापात्रमिति तु निश्चप्रचम्।

श्री शारदाचन्द्रमौळीश्वरयोरसीमया कृपया इमे ग्रन्थाः आस्तिकजन पाणिपल्लवान्यलंकुर्वन्तु भवन्तश्च श्रेयःपरम्पराभिस्समेधन्तामित्याशास्महे।।

इति नारायणस्मरणम्

शृङ्गगिरिः

प्रमाथिश्रावणकृष्णाष्टमी भार्गववासरः

३-९-१९९९

मुद्रा

SRI GURUBHYO NAMAHA

   

MUTUAL TRUST — FRIENDSHIP — TOLERANCE—OUR TRADITION

# Sri Sankara Jayanthi Celebration Committee

**6, Savitha, 70,Pestomsagar, 2nd Road, Tilaknagar P.O., BOMBAY - 89.**

**Tel. Nos. : 5241864**

Date ......

## FOREWORD

Shri Parameswara Sharma has been conducting Veda Classes in Pestom Sagar Chembur, for over two decades, and has trained over a hundred vidyarthis comprising of a wide range of asthikas covering school children, college boys, office-goers and retired elders. He has been associated with our Shri Sankara Jayanthi Celebration Committee for the past 16 years conducting Rudra-japa-abhisheka-puja along with his disciples.

Shri Parameswara Sharma's teaching skill and the recitation of vedic hymns by his disciples have been appreciated by many eminent vedic scholars and patrons of Religious & Cultural Organisations.

A momentous occasion was in June 1994, when, pleased with the excellent Ghana recitation by a few of Parameswara Sharma's young disciples,and in appreciation of his glorious spiritual service,HisHoliness Shri Bharathi Theertha Swamigal, Sringeri Mutt blessed and honoured him with a *'Ponnadai'*.

**Besides conducting veda classes, Shri Parameswara Sharma devotes his available time in compiling Vedic Literature into convenient books, in bold print, very useful to vidyarthis and religious practioners. He has compiled the following books :-**

**RUDRAM -CHAMAKAM**
**RUDRA KRAMAM**
**CHAMAKA KRAMAM**
**MAHANYASAM**
**UDAKA SHANTHI**
**ACHIDRAM**
**ASWAMEDHAM (1)**

**Copies of books compiled by Parameswara Sharma were presented to HIS HOLINESS SHRI BHARATHI THEERTHA SWAMIGAL, for His approval & blessings. His Holiness has gone through the books and has expressed His happiness and said that the books are very good and would be useful to the students**

**Appreciating his effort & dedication, His Holiness has blessed Shri Parameswara Sharma with a *SHREEMUKHAM.***

**I, on behalf of the Sri Sankara Jayanthi Celebration Committee, pray to Almighty to bestow upon Shri Parameswara Sharma, a healthy, blissful and long life to continue his noble social service of propagating Vedas and Vedic Culture among the youth and active citizens.**

**V. Venkitachalam**
**Secretary**
**Sri Sankara Jayanthi Celebration Committee**

**13th September 1999.**

## ।।सूर्याष्टोत्तरशतनामावळिः।।

ओं अरुणाय नमः। शरण्याय नमः। करुणारस सिन्धवे नमः। असमान बलाय नमः। आर्त्तरक्षकाय नमः। आदित्याय नमः। आदिभूताय नमः। अखिलागमवेदिने नमः। अच्युताय नमः। अखिलज्ञाय नमः। (१०)

ओं अनन्ताय नमः। इनाय नमः। विश्वरूपाय नमः। इज्याय नमः। इन्द्राय नमः। भानवे नमः। इन्दिरामन्दिराप्ताय नमः। वन्दनीयाय नमः। ईशाय नमः। सुप्रसन्नाय नमः।(२०)

ओं सुशीलाय नमः। सुवर्चसे नमः। वसुप्रदाय नमः। वसवे नमः। वासुदेवाय नमः। उज्ज्वलाय नमः। उग्ररूपाय नमः। ऊर्ध्वगाय नमः। विवस्वताय नमः। उद्यत्किरणजालाय नमः। (३०)

ओं हृषीकेशाय नमः। ऊर्जस्वलाय नमः। वीराय नमः। निर्जराय नमः। जयाय नमः। ऊरुद्वय भावरूपयुक्त सारथये नमः। ऋषिवन्द्याय नमः। रुग्हन्त्रे नमः। ऋक्षचक्र चराय नमः। ऋजुस्वभाव चित्ताय नमः। (४०)

ओं नित्यस्तुत्याय नमः। ऋकार मातृकावर्णरूपाय नमः। उज्वल तेजसे नमः। ऋक्षाधिनाथ मित्राय नमः। पुष्कराक्षाय नमः। लुप्तदन्ताय नमः। शान्ताय नमः। कान्तिदाय नमः। घनाय नमः। कनत्कनक भूषाय नमः।(५०)

ओं खद्योताय नमः। लूनिताखिलदैत्याय नमः। सत्यानन्द स्वरूपिणे नमः। अपवर्ग प्रदाय नमः।

# ।।सूर्याष्टोत्तरशतनामावळिः।।

आर्त्तशरण्याय नमः। एकाकिने नमः। भगवते नमः। सृष्टि स्थित्यन्तकारिणेनमः। गुणात्मनेनमः। घृणिभृतेनमः।(६०)

ओं बृहतेनमः। ब्रह्मणेनमः। ऐश्वर्यदायनमः। शर्वायनमः। हरिदश्वायनमः। शौरयेनमः। दशदिक्संप्रकाशाय नमः। भक्तवश्यायनमः। ओजस्करायनमः। जयिनेनमः।(७०)

ओं जगदानन्द हेतवे नमः। जन्ममृत्यु जरा व्याधि वर्जिताय नमः। उच्चस्थानसमारूढ रथस्थाय नमः। असुरारये नमः। कमनीयकराय नमः। अब्जवल्लभाय नमः। अन्तर्वहिः प्रकाशकाय नमः। अचिन्त्याय नमः। आत्मरूपिणे नमः। अच्युताय नमः।(८०)

ओं अमरेशाय नमः। परस्मै ज्योतिषे नमः। अहस्कराय नमः। रवये नमः। हरये नमः। परमात्मने नमः। तरुणाय नमः। वरेण्याय नमः। ग्रहाणां पतये नमः। (९०)

ओं भास्करायनमः। आदिमद्ध्यान्त रहिताय नमः। सौख्यप्रदायनमः। सकलजगतांपतयेनमः। सुर्याय नमः। कवये नमः। नारायणाय नमः। परेशाय नमः। तेजोरूपाय नमः। श्रीं हिरण्यगर्भाय नमः। ह्रीं संपत्कराय नमः। (१००)

ओं ऐं इष्टार्थदाय नमः। अनुप्रसन्नाय नमः। श्रीमते नमः। श्रेयसे नमः। भक्तकोटि सौख्यप्रदायिने नमः। निखिलागम वेद्याय नमः। नित्यानन्दाय नमः। ओं छाया उषादेवी समेत सूर्यनारायण स्वामिने नमः।। (१०८)।।

*।। सूर्य अष्टोत्तरशतनामावळिः समाप्ता।।*

# अरुणःप्रश्नः

## 1

ओं गणानान्त्वा गणपति ँ हवामहे कविङ-
कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आनश्शृण्वन्नूतिभिस्सीदसादनम्। *श्रीमहागणपतये नमः।।*
प्रणो देवी सरस्वती वाजेभि- र्वाजिनीवती।
धीनामवित्र्यवतु।। *महा सरस्वत्यै नमः।।*

उमाकोमळ हस्ताब्ज सम्भावित ललाटिकम्।
हिरण्यकुण्डलं वन्दे कुमारं पुष्करस्रजम्।।
*कुमारगुरवे नमः।।*

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्री गुरवे नमः।।
गुरवे सर्वलोकानां भिषजे भवरोगिणाम्।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः।।
गुरुचरणारविन्दाभ्यान्नमः।।

# अरुणःप्रश्नः

# 2

विनतातनयो देवः कर्मसाक्षी सुरेश्वरः।
सप्ताश्वस्सप्तरज्जुश्चाप्यरुणो मे प्रसीदतु।।
रज्जुवेत्रकशापाणिं प्रसन्नं कश्यपात्मजम्।
सर्वाभरण दीप्ताङ्गमरुणं प्रणमाम्यहम्।।
*अरुणाय नमः।।*

## अरुणःप्रश्नः

## 3

ओं अग्निमीळे पुरोहितं यॅज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्। *ऋग्वेदात्मने सूर्यनारायणस्वामिनेनमः।।*

इषेत्वोर्जेत्वा वायवस्स्थोपायवस्स्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे।।

*यजुर्वेदात्मने सूर्यनारायणस्वामिने नमः।।*

अग्न आयाहि वीतये गृणानो हव्यदातये।। निहोता सत्सिबर्हिषि।। *सामवेदात्मने सूर्यनारायणस्वामिने नमः।।*

शन्नोदेवीरभिष्टय आपो भवन्तु पीतये। शय्योरभि-स्रवन्तुनः।। *अथर्ववेदात्मने सूर्यनारायणस्वामिने नमः।।*

## 4

घृणिस्सूर्य आदित्यो न प्रभावात्यक्षरम्। मधुक्षरन्ति तद्रसम्। सत्यँव्वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।।

*छायासुवर्चलाम्बा समेत श्रीसूर्यनारायण स्वामिने नमः।।*

तरणि र्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोचनम्। उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनि स्सूर्याय त्वा भ्राजस्वते।।

*छायासुवर्चलाम्बा समेत श्रीसूर्यनारायण स्वामिने नमः ।।*

## 5

उद्यन्नद्यमित्रमहः। सपत्नान्मे अनीनशः। दिवैनान् विद्युता जहि। निम्रोचन्नधरान्कृधि। उद्यन्नद्य विनोभज। पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे। तस्य नो देहि सूर्य।।

उद्यन्नद्य मित्रमहः। आरोहन्नुत्तरान्दिवम्। हृद्रोगं मम सूर्य। हरिमाणञ्च नाशय। शुकेषु मे हरिमाणम्। रोपणाकासु दध्मसि। अथो हारिद्रवेषु मे। हरिमाण-न्निदध्मसि। उदगादयमादित्यः। विश्वेन सहसा सह। द्विषन्तं मम रन्धयन्न्। मो अहन्द्विषतो रधम्।। *मित्ररवि सूर्यभानु खगपूषहिरण्यगर्भमरीच्यादित्य सवित्रर्कभास्करेभ्यो नमः।।*

# 6

आदित्यो वा एष एतन्मण्डलन्तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचाल्लँलोकोऽथ य एष एतस्मिन्मण्डलेऽर्चि-र्दीप्यते तानि सामानि स साम्ना-ल्लँलोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुष-स्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषाल्लँलोक स्सैषा त्रय्येवविद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः।।

*छायासुवर्चलाम्बा समेत श्री सूर्यनारायण स्वामिने नमः।।*

# 7

आदित्यो वै तेज ओजो बल-य्यँशश्चक्षु-श्श्रोत्र - मात्मा मनो मन्युर्मनु-मृत्यु-स्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किङ्कन्तथ्सत्य-मन्नममृतो जीवो विश्वः कतमस्स्वयम्भु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपति ब्रह्मण स्सायुज्यꣳ स लोकतामाप्नोत्येतासामेव देवतानाꣳसायुज्यꣳसार्ष्टिताꣳ समान लोकतामाप्नोति य एव व्वँदेत्युपनिषत्।।

*छायासुवर्चलाम्बा समेत श्रीसूर्यनारायण स्वामिने नमः।।*

## ।। नवग्रहमन्त्राः ।।

आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन्॥ *आदित्याय नमः॥*

अग्निन्दूतव्वृँणीमहे होतार व्विँश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्॥ *अग्नये नमः॥*

येषामीशे पशुपतिः पशूनाञ्चतुष्पदामुत च द्विपदाम्। निष्क्रीतोऽयय्यँज्ञियं भागमेतु रायस्पोषा यजमानस्यसन्तु॥ *पशुपतये नमः॥*

**अधिदेवता प्रत्यधिदेवता सहिताय आदित्यायनमः॥**

# ।। नवग्रहमन्त्राः ।।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाँ रेताँसि जिन्वति ।।

*अङ्गारकाय नमः ।।*

स्योना पृथिवि भवा नृक्षरा निवेशनी। यच्छा नश्शर्म सप्रथाः ।। *पृथिव्यै नमः ।।*

क्षेत्रस्य पतिना वयँ हितेनेव जयामसि। गामश्वं पोषयित्न्वासनो मृडातीदृशे ।।

*क्षेत्रस्य पत्यै नमः ।।*

***अधिदेवता प्रत्यधिदेवता सहिताय अङ्गारकाय नमः ।।***

## ।। नवग्रहमन्त्राः ।।

प्रवश्शुक्राय भानवे भरद्ध्वꣳ हव्यं मतिञ्चाग्नये सुपूतम्। यो दैव्यानि मानुषा जनूꣳषि अन्त विश्वानि विद्मना जिगाति।।

*भगवते शुक्राय नमः।।*

इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम्। न ह्यस्या अपरञ्चन जरसा मरते पतिः।।

*इन्द्राण्यै नमः।।*

इन्द्रव्वो विश्वतस्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः।। *इन्द्राय नमः।।*

***अधिदेवताप्रत्यधिदेवतासहिताय भगवतेशुक्रायनमः।***

# ।। नवग्रहमन्त्राः ।।

आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम्। भवा वाजस्य सङ्गथे।।

*सोमाय नमः।।*

अफ्सुमे सोमो अब्रवीदन्त विश्वानि भेषजा। अग्निञ्च विश्वशंभुवमापश्च विश्वभेषजीः।। *अद्भ्यो नमः।।*

गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्न्।। *गौर्यै नमः।। अधिदेवताप्रत्यधिदेवतासहिताय सोमाय नमः*

# ।। नवग्रहमन्त्राः।।

उद्बुद्ध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयञ्च। पुनः कृण्वꣳस्त्वा पितर-य्युँवानमन्वाताꣳ सीत्त्वयि तन्तुमेतम्।।

*बुधाय नमः।।*

इद-व्विँष्णु-र्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाꣳसुरे।। *विष्णवे नमः।।*

विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रे स्थो विष्णोस्स्यूरसि विष्णो-र्ध्रुवमसि वैष्णवमसि विष्णवे त्वा।।

*विष्णवे नारायणाय नमः।।* ***अधिदेवता प्रत्यधिदेवता सहिताय बुधाय नमः।।***

# ।। नवग्रहमन्त्राः ।।

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसर्त-प्रजात तदस्मासु द्रविणन्धेहि चित्रम्। *बृहस्पतये नमः।।*

इन्द्रमरुत्व इह पाहि सोमय्यँथा शार्याते अपिबस्सुतस्य। तव प्रणीती तव शूरशर्मन्ना-विवासन्ति कवयस्सुयज्ञाः। *इन्द्राय मरुत्वते नमः*

ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत स्सुरुचो वेन आवः। सबुद्ध्निया उपमा अस्य विष्ठा-स्सतश्च योनिमसतश्च विवः। *ब्रह्मणेनमः।।*

***अधिदेवता प्रत्यधिदेवता सहिताय बृहस्पतये नमः।।***

# ।। नवग्रहमन्त्राः ।।

शन्नो देवीरभिष्टय आपो भवन्तु पीतये।
शय्योँरभिस्रवन्तु नः।। *शनैश्चराय नमः।।*

प्रजापते नत्वदेतान्यन्यो विश्वा जातानि
परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो
अस्तु वयꣳ स्याम पतयो रयीणाम्।।
*प्रजापतये नमः।।*

इमय्यँमप्रस्तरमाहि सीदाङ्गिरोभिः
पितृभिस्सव्विँदानः। आत्त्वामन्त्राः कविशस्ता
वहन्त्वेना राजन् हविषा मादयस्व।। ***यमाय
नमः।। अधिदेवता०००सहिताय शनैश्चराय नमः।।***

# ।। नवग्रहमन्त्राः ।।

कया नश्चित्र आ भुवदूती सदावृधस्सखा। कया शचिष्ठया वृता।।

*राहवे नमः।।*

आयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरञ्च प्रयन्थ्सुवः।। *सर्पेभ्यो नमः।।*

यत्ते देवी निरृत्ति-राबबन्ध दाम ग्रीवास्व-विचर्त्यम्। इदन्ते तद्विष्याम्यायुषो न मद्ध्यादथा जीवः पितुमद्धि प्रमुक्तः।।

*निरृत्यै नमः।।*

***अधिदेवता प्रत्यधिदेवता सहिताय राहवे नमः।।***

# ।। नवग्रहमन्त्राः ।।

केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः।। *केतुभ्यो नमः।।*

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृद्ध्राणाꣳस्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्न्।।

ब्रह्मणे नमः।।

सचित्रचित्र-ञ्चितयन्तमस्मे चित्रक्षत्र चित्रतम-व्वँयोधाम्। चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्रचन्द्राभि-र्गृणते युवस्व।। *चित्रगुप्ताय नमः।।*

***अधिदेवता प्रत्यधिदेवता सहितेभ्यःकेतुभ्यो नमः।।***

# ।। नवग्रहमन्त्राः ।।

आयुष्टे विश्वतो दधदयमग्नि-र्वरेण्यः। पुनस्ते प्राण आयति परायक्ष्मꣳ सुवामिते।। आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधुचारुगव्यं पितेव पुत्रमभिरक्षतादिमम्।। *आयुर्देवतायै नमः।।*

अपैतु मृत्युरमृतन्न आगन्वैवस्वतो नो अभयङ्कृणोतु। पर्ण-व्वँनस्पतेरिवाभिन-श्शीयताꣳ रयि-स्सचतान्न-श्शचीपतिः।।
*अपमृत्युहर देवतायै नमः।।*

## ।। नवग्रहमन्त्राः ।।

परं मृत्यो अनु परेहि पन्था-य्यँस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजा॑ँरीरिषो मोत वीरान्।।

*अपमृत्युहर देवतायै नमः।।*

*************

ओं श्री गणेश शारदा गुरुभ्यो नमः

श्री वेदव्यासाय नमः

# अरुणप्रश्नः

हरिः ओ(४)म्

भद्रङ्कर्णेभि श्शृणुयाम देवाः। भद्रं पश्येमाक्षभि र्यजत्राः। स्थिरैरङ्गै स्तुष्टुवाꣳस स्तनूभिः। व्यशेम देवहित-य्यँदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पति र्दधातु।।

ओं शान्तिश्शान्तिश्शान्तिः।।

## ००२

१ भद्रङ्कर्णेभि श्शृणुयाम देवाः। भद्रं पश्येमाक्षभि र्यजत्राः। स्थिरैरङ्गै स्तुष्टुवा७स स्तनूभिः। व्यशेम देवहित-य्यँदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पति र्दधातु। आपमापामपस्सर्वाः। अस्मादस्मादितोऽमुतः। [१]

अग्निर्वायुश्च सूर्यश्च। सह सञ्च-स्करर्द्धिया। वाय्वश्वा रश्मिपतयः। मरीच्या-

त्मानो अद्रुहः। देवीर्भुवन सूवरीः। पुत्रवत्त्वाय मे सुत। महानाम्नी र्महामानाः। महसो महसस्स्वः। देवीः पर्जन्य सूवरीः। पुत्रवत्त्वाय मे सुत। [२]

अपाश्न्युष्णिमपारक्षः। अपाश्न्युष्णिमपारघम्। अपाघ्राममपचावर्तिम्। अप देवीरितोहित। वज्रन्देवीरजीताँश्च। भुवनन्देवसूवरीः। आदित्यानदितिन्देवीम्। योनिनोदूर्ध्वमुदीषत। शिवानश्शन्तमाभवन्तु। दिव्या आप ओषधयः। सुमृडीका सरस्वति।

माते व्योम सन्दृशि।। [३] [अमुत स्सुतौषधयो द्वे च]

२ स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानश्चतुष्टयम्। एतैरादित्यमण्डलम्। सर्वैरेव विधास्यते। सूर्यो मरीचिमादत्ते। सर्वस्माद्भुवनादधि। तस्याः पाकविशेषेण। स्मृतङ्कालविशेषणम्। नदीव प्रभवा-त्काचित्। अक्षय्यात्स्यन्दते यथा। [४]

तान्नद्योऽभिसमायन्ति। सोरुस्सतीन निवर्तते। एवन्नाना समुत्थानाः।

काला स्सँव्वँथ्सरꣳ श्रिताः। अणुशश्च महशश्च। सर्वे समवयन्त्रितम्। सतैस्सर्वै स्समाविष्टः। ऊरुस्सन्न निवर्तते। अधिसव्वँथ्सर-व्विँद्यात्। तदेव लक्षणे। [५]

अणुभिश्च महद्भिश्च। समारूढः प्रदृश्यते। सव्वँथ्सरः प्रत्यक्षेण। नाधिसत्त्वः प्रदृश्यते। पटरो विक्लिधः पिङ्गः। एतद्वरुण लक्षणम्। यत्रैतदुपदृश्यते। सहस्र-न्तत्रनीयते। एकꣳ हि शिरो नानामुखे। कृथ्स्नन्तदृतुलक्षणम्। [६]

उभयत स्सप्तेन्द्रियाणि। जल्पितन्त्वेव दिह्यते। शुक्लकृष्णे सँव्वँथ्सरस्य। दक्षिणवामयोः पार्श्वयोः। तस्यैषा भवति। शुक्रन्ते अन्यद्यजतन्ते अन्यत्। विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावः। भद्रा ते पूषन्निह रातिरस्त्विति। नात्र भुवनम्। न पूषा। न पशवः। नादित्य स्सँव्वँथ्सर एव प्रत्यक्षेण प्रियतम व्विँद्यात्। एतद्वै सँव्वँथ्सरस्य प्रियतम७ रूपम्। योऽस्य महानर्थ उत्पथ्स्यमानो भवति।

इदं पुण्यङ्कुरुष्वेति। तमाहरणन्दद्यात्।[७]

*यथालक्षण ऋतुलक्षणं भुवनꣳ सप्त च।।*

३ साकञ्जानाꣳसप्तथमाहुरेकजम्। षड्डुद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामशः। स्थात्रे रेजन्ते विकृतानि रूपशः। कोनुमर्या अमिथितः। सखा सखायमब्रवीत्। जहाको अस्मदीषते। यस्तित्याज सखिविदꣳ सखायम्। न तस्य वाच्यपि भागो अस्ति। यदीꣳशृणोत्यलकꣳ शृणोति। [८]

न हि प्रवेद सुकृतस्य पन्थामिति। ऋतुर् ऋतुना नुद्यमानः। विननादाभिधावः। षष्टिश्च त्रिँशका वल्गाः। शुक्लकृष्णौ च षाष्टिकौ। सारागवस्त्रै र्जरदक्षः। वसन्तो वसुभिस्सह। सव्वँथ्सरस्य सवितुः। प्रैषकृत्-प्रथम स्स्मृतः। अमूनादयतेत्यन्यान्। [९]

अमूँ श्च परिरक्षतः। एता वाचः प्रयुज्यन्ते। यत्रैतदुपदृश्यते। एतदेव विजानीयात्। प्रमाणङ्कालपर्यये। विशेषणन्तु वक्ष्यामः। ऋतूनान्तन्निबोधत।

शुक्लवासा रुद्रगणः। ग्रीष्मेणावर्तते सह।
निजहन्पृथिवीँसर्वाम्। [१०]

ज्योतिषा प्रतिख्येनसः। विश्व - रूपाणि
वासाँसि। आदित्यानान्निबोधत। सव्वँथ्सरी-
णङ्कर्मफलम्। वरूषाभि र्ददताँ सह।
अदुःखो दुःखचक्षुरिव। तद्मापीत इव दृश्यते
शीतेनाव्यथयन्निव। रुरुदक्ष इव दृश्यते।
ह्लादयते ज्वलतश्चैव। शाम्यतश्चास्य
चक्षुषी। यावै प्रजा भ्रँश्यन्ते। सव्वँथ्सरात्ता
भ्रँश्यन्ते। याः प्रतितिष्ठन्ति। सव्वँथ्सरे

ताः प्रतितिष्ठन्ति। वर्षाभ्य इत्यर्थः।। [११]

।। शृणोत्यन्यान् थ्सर्वामेव षट् च।।

४ अक्षिदुःखोत्थितस्यैव। विप्रसन्ने कनीनिके। आङ्क्ते चाद्गणन्नास्ति। ऋभूणा-न्तन्निबोधत। कनकाभानि वासाꣳसि। अहतानि निबोधत। अन्नमश्नीत मृज्मीत। अहव्वो जीवनप्रदः। एता वाचः प्रयुज्यन्ते। शरद्यत्रोपदृश्यते। [१२]

अभिधून्वन्तोऽभिघ्नन्त इव। वातवन्तो मरुद्गणाः। अमुतो जेतुमिषुमुख-मिव। सन्नद्धा स्सह ददृशेह। अपद्ध्वस्तै र्वस्तिवर्णैरिव। विशिखासः कपर्दिनः।

अक्रुद्धस्य योत्स्यमानस्य। क्रुद्धस्येव लोहिनी। हेमतश्चक्षुषी विद्यात्। अक्ष्णयोः क्षिपुणोरिव। [१३]

दुर्भिक्षन्देवलोकेषु। मनूनामुदकङ्गृहे। एता वाचः प्रवदन्तीः। वैद्युतो यान्ति शैशिरीः। ता अग्निः पवमाना अन्वैक्षत। इह जीविकामपरिपश्यन्न्। तस्यैषा भवति। इहेहवस्स्वतपसः। मरुत स्सूर्यत्त्वचः। शर्म सप्रथा आवृणे।। [१४]।। दृश्यत इवावृणे।।

५ अतिताम्राणि वासाꣳसि। अष्टि वज्रिशतघ्नि च। विश्वेदेवा विप्रहरन्ति। अग्निजिह्वा असश्चत। नैव देवो न मर्त्यः। न राजा वरुणो विभुः। नाग्नि नेन्द्रो न पवमानः। मातृक्कच्चन विद्यते। दिव्यस्यैका धनुरार्त्निः। पृथिव्यामपरा श्रिता। [१५]

तस्येन्द्रो वम्रिरूपेण। धनुर्ज्यामछिन्थ्स्वयम्। तदिन्द्रधनुरित्यज्यम्। अभ्रवर्णेषु चक्षते। एतदेव शय्ँयो बार्हस्पत्यस्य। एतद्रुद्रस्य धनुः। रुद्रस्य त्वेव धनुरार्त्निः। शिर उत्पिपेष। स प्रवर्ग्योऽभवत्।

तस्माद्य-स्सप्रवर्ग्येण यज्ञेन यजते। रुद्रस्य स शिरः प्रतिदधाति। नैनꣳ रुद्र आरुको भवति। य एवव्वँद।। [१६] *श्रिता यजते त्रीणि च।।*

६ अत्यूदूर्ध्वाक्षोऽतिरश्चात्। शिशिरः प्रदृश्यते। नैव रूपन्न वासाꣳसि। न चक्षुः प्रतिदृश्यते। अन्योन्यन्तु न हिꣳस्रातः। सत स्तद्देवलक्षणम्। लोहितोऽक्षिण शारशीर्ष्णिः। सूर्यस्योदयनं प्रति। त्वङ्करोषि न्यञ्जलिकाम्। त्वङ्करोषि निजानुकाम्। [१७]

निजानुकामे न्यञ्जलिका। अमी
वाचमुपासतामिति। तस्मै सर्व ऋतवो नमन्ते।
मर्यादाकरत्वात् प्रपुरोधाम्। ब्राह्मण आप्नोति।
य एवव्वेँद। स खलु सव्वँथ्सर एतै
स्सेनानीभि स्सह। इन्द्राय सर्वान्कामानभि-
वहति। सद्रफ्सः। तस्यैषा भवति। [१८]
अवद्रफ्सो अंशुमतीमतिष्ठत्।
इयानः कृष्णो दशभि स्सहस्त्रैः। आवर्तमिन्द्र-
श्शच्या धमन्तम्। उपस्नुहि तन्नृमणामथद्रा-
मिति। एतयैवेन्द्र स्सलावृक्या सह।

असुरान्परिवृश्चति। पृथिव्यꣳशुमती।
तामन्ववस्थित स्सँव्वथ्सरो दिवञ्च। नैव-
व्विँदुषाऽऽचार्यान्तेवासिनौ। अन्योन्यस्मै
द्रुह्याताम्। यो द्रुह्यति। भ्रश्यते स्वर्गा-
ल्लोकात्। इत्यृतुमण्डलानि। सूर्यमण्डला-
न्याख्यायिकाः। अत ऊर्द्ध्वꣳसनिर्वचनाः॥

[१९] *निजानुकां भवति द्रुह्यातां पञ्च च॥*

७ आरोगो भ्राजः पटरः पतङ्गः।
स्वर्णरो ज्योतिषीमान् विभासः। ते अस्मै
सर्वे दिवमातपन्ति। ऊर्जन्दुहाना अनप-

स्फुरन्त इति। कश्यपोऽष्टमः। स महामेरुन्न जहाति। तस्यैषा भवति। यत्ते शिल्प-ङ्कश्यप रोचनावत्। इन्द्रियावत्पुष्कलञ्चित्र भानु। यस्मिन्थ्सूर्या अर्पिता स्सप्तसाकम्। [२०]

तस्मिन्राजानमधिविश्रयेममिति।

ते अस्मै सर्वे कश्यपा-ज्ज्योति र्लभन्ते। तान्थ्सोमः कश्यपादधिनिर्द्धमति। भ्रस्ताकर्म-कृदिवैवम्। प्राणो जीवानीन्द्रिय जीवानि। सप्तशीरूषण्याः प्राणाः। सूर्या इत्याचार्याः।

अपश्यमहमेतान्थ्सप्तसूर्यानिति। पञ्चकर्णो
वाथ्स्यायनः। सप्तकर्णश्च प्लाक्षिः। [२१]

आनुश्रविक एव नौ कश्यप इति।
उभौ वेदयिते। नहि शेकुमिव महामेरुं गन्तुम्
अपश्यमहमेत-थ्सूर्यमण्डलं परिवर्तमानम्।
गार्ग्यः प्राणत्रातः। गच्छन्त महामेरुम्।
एकञ्चाजहतम्। भ्राजपटरपतङ्गा निहने।
तिष्ठन्नातपन्ति। तस्मादिह तप्त्रितपाः। [२२]

अमुत्रेतरे। तस्मादिहातप्त्रितपाः।
तेषामेषा भवति। सप्तसूर्या दिवमनु प्रविष्टाः।

तानन्वेति पथिभि र्दक्षिणावान्। ते अस्मै सर्वे घृतमातपन्ति। ऊर्जन्दुहाना अनपस्फुरन्त इति। सप्तर्त्विज स्सूर्या इत्याचार्याः। तेषामेषा भवति। सप्तदिशो नानासूर्याः।[२३]

सप्तहोतार ऋत्विजः। देवा आदित्या ये सप्त। तेभिस्सोमाभी रक्षण इति। तदप्याम्नायः। दिग्भ्राज ऋतून्करोति। एतयैवावृता सहस्रसूर्यताया इति वैशंपायनः। तस्यैषा भवति। यद्द्याव इन्द्र ते शतꣳ शतं भूमीः। उतस्युः। न त्वा वज्रिन्थ्सहस्रꣳ सूर्याः। [२४]।।

अनुन जातमष्टरोदसी इति। नानालिङ्गत्वा- दृतूनान्नानासूर्यत्वम्। अष्टौ तु व्यवसिता इति। सूर्यमण्डलान्यष्टात ऊद्ध्र्वम्। तेषामेषा भवति। चित्रन्देवानामुदगादनीकम्। चक्षुर्मित्रस्य वरुणस्याग्नेः। आऽप्राद्यावापृथिवी अन्तरिक्षम्। सूर्य आत्मा जगतस्तस्थुषश्चेति।।[२५]।। *(साकं प्लाक्षि स्तप्तितपा नानासूर्या स्सूर्या नव च)।।*

८ क्वेदमभ्रन्निविशते। क्वाय७ंसव्वँथ्सरो मिथः। क्वाहः क्वेयन्देवरात्री। क्व मासा ऋतवश्शिश्रताः। अर्द्धमासा मुहूर्ताः। निमेषास्त्रुटिभिस्सह। क्वेमा आपो निविशन्ते।

यदीतो यान्ति संप्रति। काला अफ्सु निविशन्ते। आपस्सूर्ये समाहिताः। [२६]

अभ्राँण्यपः प्रपद्यन्ते। विद्युथ्सूर्ये समाहिता। अनवर्णे इमे भूमी। इयञ्चासौ च रोदसी। किꣳ स्विदत्रान्तरा भूतम्। येनेमे विधृते उभे। विष्णुना विधृते भूमी। इति वथ्सस्य वेदना। इरावती धेनुमती हि भूतम्। सूयवसिनी मनुषे दशस्येँ। [२७]

व्यष्टभ्नाद्रोदसी विष्णवे ते। दाधर्थ पृथिवीमभितो मयूखैँः। किन्तद्विष्णो र्बलमाहुः।

का दीप्तिः किं परायणम्। एको यद्धारय-
द्देवः। रेजती रोदसी उभे। वाताद्विष्णो र्बल-
माहुः। अक्षराद्दीप्तिरुच्यते। त्रिपदाद्धारयद्देवः।
यद्विष्णोरेकमुत्तमम्। [२८]

अग्नयो वायवश्चैव। एतदस्य
परायणम्। पृच्छामि त्वा परं मृत्युम्। अवमं
मद्ध्यमञ्चतुम्। लोकञ्च पुण्य पापानाम्।
एतत्पृच्छामि संप्रति। अमुमाहुः परं मृत्युम्।
पवमानन्तु मद्ध्यमम्। अग्निरेवावमो मृत्युः।
चन्द्रमाश्चतुरुच्यते। [२९]

अनाभोगाः परं मृत्युम्। पापा-
स्सय्यँन्ति सर्वदा। आभोगास्त्वेव सय्यँन्ति।
यत्र पुण्यकृतो जनाः। ततो मद्ध्यममायन्ति।
चतुर्मग्निञ्च संप्रति। पृच्छामित्वा पापकृतः।
यत्र यातयते यमः। त्वन्नस्तद्-ब्रह्मन्प्रब्रूहि।
यदि वेत्थाऽसतो गृहान्। [३०]

कश्यपादुदिता स्सूर्याः। पापान्निर्घ्नन्ति
सर्वदा। रोदस्योरन्तर्देशेषु। तत्र न्यस्यन्ते
वासवैः। तेऽशरीराः प्रपद्यन्ते। यथाऽपुण्यस्य
कर्मणः। अपाण्यपाद-केशासः।

तत्र तेऽयोनिजा जनाः। मृत्त्वा पुनर्मृत्यु-
मापद्यन्ते। अद्यमाना स्स्वकर्मभिः। [३१]

आशातिकाः क्रिमय इव। ततः
पूयन्ते वासवैः। अपैतं मृत्युञ्जयति। य एव-
वँवेद। स खल्वैवव्विँद्-ब्राह्मणः। दीर्घश्रुत्तमो
भवति। कश्यपस्यातिथि स्सिद्धगमन-
स्सिद्धागमनः। तस्यैषा भवति। आयस्मिँन्-
थ्सप्त वासवाः। रोहन्ति पूर्व्यारुहः। [३२]

ऋषिर् ह दीर्घश्रुत्तमः। इन्द्रस्य घर्मो
अतिथिरिति। कश्यपः पश्यको भवति।

यथ्सर्वं परिपश्यतीति सौक्ष्म्यात्। अथाग्नेरष्ट पुरुषस्य। तस्यैषा भवति। अग्ने नय सुपथा राये अस्मान्। विश्वानिदेव वयुनानि विद्वान्। युयोद्ध्यस्म-ज्जुहुराणमेनः। भूयिष्ठान्ते नमउक्तिं विधेमेति।। [३२]

*समाहिता दशस्ये उत्तममुच्यते गृहान्थ्स्वकर्मभिः पूर्व्यारुह इति।।*

२५

१ अग्निश्च जातवेदाश्च। सहोजा अजिराप्रभुः। वैश्वानरो नर्यापाश्च। पङ्क्तिराधाश्च सप्तमः। विसर्पे वाष्टमोऽग्नीनाम्। एतेऽष्टौ वसवः क्षिता इति। यथर्त्वेवाग्नेरर्चि वर्ण विशेषाः। नीलार्चिश्च पीतकार्चिश्चेति। अथ वायोरेकादश पुरुषस्यैकादशस्त्रीकस्य। प्रभ्राजमाना व्यवदाताः। [३४]।।

याश्च वासुकि वैद्युताः। रजताः परुषाश्श्यामाः। कपिला अतिलोहिताः।

ऊर्द्ध्वा अवपतन्ताश्च। वैद्युत इत्येकादश। नैनव्वैँद्युतो हिनस्ति। य एवव्वँद। सहोवाच व्यासः पाराशर्यः। विद्युद्वधमेवाहं मृत्युमैच्छमिति। न त्वकामꣳहन्ति। [३५]

य एवव्वँद। अथ गन्धर्वगणाः। स्वानभ्राट्। अङ्घारिर्बम्भारिः। हस्तस्सुहस्तः। कृशानुर्विश्वावसुः। मूर्द्धन्वान् थ्सूर्यवर्चाः। कृतिरित्येकादश गन्धर्वगणाः। देवाश्च महादेवाः। रश्मयश्च देवागरगिरः। [३६]।।

नैनङ्गरो हिनस्ति। य एवव्वँद।

गौरीमिमाय सलिलानि तक्षती। एकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी। सहस्राक्षरा परमेव्योमन्निति। वाचो विशेषणम्। अथ निगदव्याख्याताः। ताननु-क्रमिष्यामः। वराहवस्स्वतपसः। [३७]।।

विद्युन्महसो धूपयः। श्वापयो गृहमेधाश्चेत्येते। ये चेमे शिमिविद्विषः। पर्जन्या स्सप्तपृथिवीमभिवर्षन्ति। वृष्टिभि-रिति। एतयैव विभक्ति विपरीताः। सप्तभिर्वातैरुदीरिताः। अमूल्लोँकानभि-

वर्षन्ति। तेषामेषा भवति। समानमेतदु-
दकम्। [३८]।

उच्चैत्यवचाहभिः। भूमिं पर्जन्या
जिन्वन्ति। दिवञ्जिन्वन्त्यग्नय इति। यदक्षरं
भूतकृतम्। विश्वेदेवा उपासते। महर्षिमस्य
गोप्तारम्। जमदग्निमकुर्वत। जमदग्नि-
राप्यायते। छन्दोभि श्चतुरुत्तरैः। राज्ञ-
स्सोमस्य तृप्तासः। [३९]।

ब्रह्मणा वीर्यावता। शिवानः प्रदिशो
दिशः। तच्छय्योँरावृणीमहे। गातुय्यँज्ञाय।

२९

गातुर्य्यँज्ञपतये। दैवीस्वस्तिरस्तु नः। स्वस्ति-र्मानुषेभ्यः। ऊर्द्ध्वञ्जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शञ्चतुष्पदे। सोमपा (३) असोमपा(३)इति निगदव्याख्याताः।[४०]।।

*व्यवदाता हन्ति गरगिर स्तपस उदकन्तृप्तास श्चतुष्पद एकञ्च।*

१० सहस्रवृदियं भूमिः। परव्व्योम सहस्रवृत्। अश्विना भुज्यूनासत्या। विश्वस्य जगतस्पती। जाया भूमिः पतिर्व्योम। मिथुनन्ता अतुर्यथुः। पुत्रो बृहस्पती रुद्रः। सरमा इति स्त्रीपुमम्। शुक्रव्वाँमन्यद्यजतव्वाँमन्यत्। विषुरूपे अहनी द्यौरिवस्थः। [४१]।।

विश्वा हि माया अवथस्स्वधावन्तौ। भद्रावां पूषणाविहरातिरस्तु। वासात्यौ चित्रौ जगतो निधानौ। द्यावाभूमी चरथस्सँ सखायौ। तावश्विना रासभाश्वा हवं मे।

शुभस्पती आगत॒ꣳ सूर्यया सह। त्युग्रो ह भुज्युमश्विनोदमेघे। रयिन्न कश्चिन्ममृवा(२)० अवाहाः। तमूहथुर्नौभिरात्मन्वतीभिः। अन्तरिक्षप्रुड्भिरपोदकाभिः। [४२]॥

तिस्रः क्षपस्त्रिरहातिव्रजद्भिः। नासत्या भुज्युमूहथुः पतङ्गैः। समुद्रस्य धन्वन्नार्द्रस्य पारे। त्रिभी रथैश्शतपद्भिः षडश्वैः। सवितारव्विँतन्वन्तम्। अनुबद्ध्नाति शांबरः। आपपूरषंबरश्चैव। सविता रेपसोऽभवत्। त्यꣳसुतृप्तंविदित्वैव।

बहुसोमगिरव्वँशी। [४३]।।

अन्वेतितुग्रोवक्रियान्तम्। आयसूयान्थ्सोमतृफ्सुषु। ससङ्ग्रामस्तमोद्योऽत्योतः। वाचोगाः पिपाति तत्। सतद्गोभिस्स्तवाऽत्येत्यन्ये। रक्षसानन्विताश्च ये।। अन्वेति परिवृत्यास्तः। एवमेतौ स्थो अश्विना। ते एतेद्युःपृथिव्योः। अहरहर्गर्भन्दधाथे। [४४] ।।

तयोरेतौ वथ्सावहोरात्रे। पृथिव्याअहः। दिवोरात्रिः। ता अविसृष्टौ। दंपती एवभवतः।

तयोरेतौ वथ्सौ। अग्निश्चादित्यश्च। रात्रेर्वथ्सः। श्वेत आदित्यः। अह्नोऽग्निः। [४५] ।।

ताम्रो अरुणः। ता अविसृष्टौ। दंपती एव भवतः। तयोरेतौ वथ्सौ। वृत्रश्च वैद्युतश्च। अग्नेर्वृत्रः। वैद्युत आदित्यस्य। ता अविसृष्टौ। दंपती एव भवतः। तयोरेतौ वथ्सौ। [४६]।।

उष्मा च नीहारश्च। वृत्रस्योष्मा। वैद्युतस्य नीहारः। तौ तावेव प्रतिपद्येते।

## ३४

सेय ँ रात्री गर्भिणी पुत्रेणसव्ँसति। तस्यावा एतदुल्बणम्। यद्रात्रौ रश्मयः। यथा गोर्गर्भिण्या उल्बणम्। एवमेतस्या उल्बणम्। प्रजयिष्णुः प्रजया च पशुभिश्च भवति। य एवव्ँवेद। एतमुद्यन्तमपियन्तन्चेति। आदित्यः पुण्यस्य वथ्सः। अथ पवित्राङ्गिरसः। [४७]।।

*स्थोऽपोदकाभि र्वशी दधाथे अग्निस्तयोरेतौ वथ्सौ भवति चत्वारिच।।*

११ पवित्रवन्तः परिवाजमासते। पितैषां प्रत्नो अभिरक्षति व्रतम्। महस्समुद्रव्वँरुण स्तिरोदधे। धीरा इच्छेकुर्द्धरुणेष्वारभम्। पवित्रन्ते विततं ब्रह्मणस्पते। प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनू र्न तदामो अश्नुते। शृता-स इद्वहन्तस्तत्समाशत। ब्रह्मा देवानाम्। असतस्सद्ये ततक्षुः। [४८]।

ऋषय स्सप्तात्रिश्च यत्। सर्वेऽत्र यो अगस्त्यश्च। नक्षत्रै श्शङ्कृतोऽवसन्न्। अथ सवितु-श्श्यावाश्वस्यावर्तिकामस्य। अमीय

ऋक्षा निहिता–स उच्चा। नक्तन्ददृश्रे कुह चिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि। विचाकशच्चन्द्रमा नक्षत्रमेति। तथ्सवितु-र्वरेण्यम्। भर्गो देवस्य धीमहि। [४९]>>

धियो यो नः प्रचोदयात्। तथ्सवितु-र्वृणीमहे। वयन्देवस्य भोजनम्। श्रेष्ठꣳ सर्व धातमम्। तुरं भगस्य धीमहि। अपागूहत सविता तृभीन्। सर्वान्दिवो अन्धसः। नक्तन्तान्यभवन्दृशे। अस्थ्यस्थ्ना संभविष्यामः। नाम नामैव नाम मे। [५०]।।

३७

न पुꣳसकं पुमाꣳस्त्र्यस्मि। स्थावरोऽस्म्यथ जङ्गमः। यजे यक्षि यष्टाहे च। मया भूतान्ययक्षत। पशवो मम भूतानि। अनूबन्ध्यो ऽस्म्यहव्विंभुः। स्त्रियस्सतीः। ता उ मे पुꣳस आहुः। पश्यदक्षण्वान्न विचेतदन्धः। कविर्यः पुत्रस्स इमाचिकेत। [५१]।।

यस्ताविजानाथ्सवितुः पितासत्। अन्धो मणिमविन्दत्। तमनङ्गुलिरावयत्। अग्रीवः प्रत्यमुञ्चत्। तमजिह्वा असश्चत।

ऊर्ध्वमूलमवाक्छाखम्। वृक्षय्यों वेद संप्रति। न स जातु जनश्श्रद्दध्यात्। मृत्युर्मा मारयादिति:। हसितꣳरुदितङ्गीतम्। [५२]

वीणापणवलासितम्। मृतञ्जीवञ्च यत्किञ्चित्। अङ्गानि स्नेव विद्धि तत्। अतृष्यꣴस्तृष्यद्ध्यायत्। अस्माज्जाता मे मिथूचरन्न्। पुत्रो निर्ऋत्या वैदेहः। अचेता यश्च चेतनः। स तं मणिमविन्दत्। सोऽनङ्गुलिरावयत्। सोऽग्रीवः प्रत्यमुञ्चत्। सोऽजिह्वो असश्चत। नैतमृषि- व्विँदित्वा

नगरं प्रविशेत्। यदि प्रविशेत्। मिथौ चरित्त्वा प्रविशेत्। तथ्संभवस्य व्रतम्। आतमग्ने रथन्तिष्ठ। एकाश्वमेकयोजनम्। एकचक्रमेकधुरम्। वातद्ध्राजिगतिं विभो। न रिष्यति न व्यथते। [५४]।।

नास्याक्षो यातु सज्जति। यच्छ्वेतान् रोहिताꣳश्चाग्नेः। रथे युक्त्वाधितिष्ठति। एकया च दशभिश्च स्वभूते। द्वाभ्यामिष्टये विꣳशत्या च। तिसृभिश्च वहसे त्रिꣳशता च। नियुद्भि र्वायविह ता विमुञ्च।[५५]।।

(ततक्षु र्ह्रीमहिनाममेचिकेतगीतं प्रत्यमुञ्च-द्व्यथते सप्त च)।।

१२ आतनुष्व प्रतनुष्व। उद्धमाधम सन्धम। आदित्ये चन्द्रवर्णानाम्। गर्भमाधेहि यः पुमान्। इतस्सिक्त७ सूर्यगतम्। चन्द्रमसे रसङ्कृधि। वारादञ्जनयाग्रेऽग्निम्। य एको रुद्र उच्यते। असङ्ख्याता स्सहस्राणि। स्मर्यते न च दृश्यते। [५६]।।

एवमेतन्निबोधत। आमन्द्रैरिन्द्र हरिभिः। याहि मयूर रोमभिः। मा त्वा केचिन्नियेमुरिन्न पाशिनः। दधन्वेवता इहि। मामन्द्रैरिन्द्रहरिभिः।

यामि मयूर रोमभिः। मा मा केचिन्नियेमुरिन्न पाशिनः। निधन्वेवता(२)० इमि। अणुभिश्च महद्भिश्च। [५७]।।

निघृष्वैरसमायुतैः। कालैर् हरित्व-मापन्नैः। इन्द्रायाहि सहस्रयुक्। अग्निर्विभ्राष्टि वसनः। वायुश्श्वेतसिकद्रुकः। सव्वँथ्सरो विषूवर्णैः। नित्यास्तेऽनुचरास्तव। सुब्रह्मण्यो३ सुब्रह्मण्यो३ सुब्रह्मण्योम्। इन्द्रागच्छ हरिव आगच्छ मेधातिथेः। मेषवृषणश्वस्य मेने। [५८]।।

गौरावस्कन्दिन्नहल्यायै जार। कौशिकब्राह्मण गौतम्म ब्रुवाण। अरुणाश्वा इहागताः। वसवः पृथिविक्षितः। अष्टौ दिग्वाससोऽग्नयः। अग्निश्च जातवेदाश्चेत्येते। ताम्राश्वा स्ताम्र रथाः। ताम्रवर्णा स्तथासिताः। दण्डहस्ताः खादग्दतः। इतो रुद्राः पराङ्गताः। [५९]।।

उक्तꣳ स्थानं प्रमाणञ्च पुर इत। बृहस्पतिश्च सविता च। विश्वरूपैरिहागताम् रथेनोदकवर्त्मना। अप्सुषा इति तद्वयोः। उक्तोवेषो वासाꣳसि च। कालावयवानामितः

## ४३

प्रतीच्या। वासात्या इत्यश्विनोः। कोऽन्तरिक्षे शब्दङ्करोतीति। वासिष्ठो रौहिणो मीमाँ-साञ्चक्रे। तस्यैषा भवति। वाश्रेव विद्युदिति। ब्रह्मण उदरणमसि। ब्रह्मण उदीरणमसि। ब्रह्मण आस्तरणमसि। ब्रह्मण उपस्तरणमसि। [६०]।।

*(दृश्यते च मेने पराङ्गता श्चक्रे षट्च)।।*

१३ अष्टयोनीमष्टपुत्राम्।
अष्टपत्नीमिमां महीम्। अहव्वेद नमे मृत्युः।
न चामृत्युरघाहरत्। अष्टयोन्यष्टपुत्रम्।
अष्टपदिदमन्तरिक्षम्। अहव्वेद न मे मृत्युः।
न चामृत्युरघाहरत्। अष्टयोनीमष्टपुत्राम्।
अष्टपत्नीममून्दिवम्। [६१]।।

अहव्वेद न मे मृत्युः। न चामृत्यु-
रघाहरत्। सुत्रामाणं महीमूषु। अदितिर्द्यौ-
रदितिरन्तरिक्षम्। अदिति-र्माता स पिता स
पुत्रः। विश्वे देवा अदितिः पञ्चजनाः।

अदिति-र्जात-मदिति-र्जनित्त्वम्। अष्टौपुत्रासो अदितेः। ये जाता स्तन्वः परि। देवा(२)० उपप्रैथ्सप्तभिः। [६२]।।

परामार्ताण्डमास्यत्। सप्तभिः पुत्रै-रदितिः। उप प्रैत्पूर्व्य-य्युँगम्। प्रजायै मृत्यवे तत्। परामार्ताण्डमाभरदिति।ताननुक्रमि-ष्यामः। मित्रश्च वरुणश्च। धाता चार्यमा च। अꣳशश्च भगश्च। इन्द्रश्च विवस्वाꣳश्चेत्येते। हिरण्यगर्भो हꣳस-श्शुचिषत्। ब्रह्मजज्ञानन्तदित्पदमिति।

गर्भः प्राजापत्यः। अथपुरुष स्सप्तपुरुषः।
[६३]।। *(अमून्दिवꣳसप्तभिरेते चत्वारि च)*।।

१४ योऽसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणानादायोदगाः।

असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणानादायास्तमेति। मामे प्रजाया मापशूनाम्। मा मम प्राणानादायास्तङ्गाः।

असौ य आपूर्यति। स सर्वेषां भूतानां प्राणैरापूर्यति। [६४]।।

## ४७

मामे प्रजाया मा पशूनाम्। मा मम प्राणैरापूरिष्ठाः।

असौ योऽपक्षीयति। स सर्वेषां भूतानां प्राणैरपक्षीयति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपक्षेष्ठाः।

अमूनि नक्षत्राणि। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपप्रसृपत मोत्सृपत। [६५]।।

इमे मासाश्चार्द्धमासाश्च। सर्वेषां

भूतानां प्राणैरपप्रसर्पन्ति चोथ्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृपत मोथ्सृपत।

इम ऋतवः। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोथ्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपप्रसृपत मोथ्सृपत।

अयꣳ सव्वँथ्सरः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोथ्सर्पति च। [६६]।।

मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृप मोथ्सृप।

## ४९

इदमहः। सर्वेषां भूतानां प्राणैरपप्रसर्पति चोथ्सर्पति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृप मोथ्सृप।

इय॑ रात्रिः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोथ्सर्पति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृप मोथ्सृप।

ओं भूर्भुवस्स्वः। एतद्वो मिथुनं मा नो मिथुन॑ रीढ्वम्।। [६७]।। (*प्राणैरापूर्यति मोथ्सृपत चोथ्सर्पति च मोथ्सृप द्वे च*)।।

१५ अथादित्यस्याष्टपुरुषस्य।

वसूनामादित्याना ँ स्थाने स्वतेजसा भानि।
रुद्राणामादित्याना ँ स्थाने स्वतेजसा भानि।
आदित्यानामादित्याना ँ स्थानेस्वतेजसाभानि।
सता ँ सत्यानाम्। आदित्याना ँ स्थाने
स्वतेजसा भानि। अभिधून्वतामभिघ्नताम्।
वातवतां मरुताम्। आदित्याना ँ स्थाने
स्वतेजसा भानि। ऋभूणामादित्याना ँ स्थाने
स्वतेजसा भानि। विश्वेषान्देवानाम्।
आदित्याना ँ स्थाने स्वतेजसा भानि।

सव्वँथ्सरस्य सवितुः। आदित्यस्य स्थाने स्वतेजसा भानि। ओं भूर्भुवस्स्वः। रश्मयो वो मिथुनं मानो मिथुनꣳरीढ्वम्।। [६८]।

*(ऋभूणामादित्यानाꣳस्थाने स्वतेजसा भानि षट्च)।।*

१६ आरोगस्य स्थाने स्वतेजसा भानि।

भ्राजस्य स्थाने स्वतेजसा भानि।

पटरस्य स्थाने स्वतेजसा भानि।

पतङ्गस्य स्थाने स्वतेजसा भानि।

स्वर्णरस्य स्थाने स्वतेजसा भानि।

ज्योतिषीमतस्य स्थाने स्वतेजसा भानि।

विभासस्य स्थाने स्वतेजसा भानि।

कश्यपस्य स्थाने स्वतेजसा भानि।

ओं भूर्भुवस्स्वः। आपो वो मिथुनं मानो मिथुनꣳरीढ्वम्।[६९]।। (आरोगस्य दश )।।

१७ अथ वायोरेकादश

पुरुषस्यैका दशस्त्रीकस्य।

प्रभ्राजमानानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।

व्यवदातानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।

वासुकिवैद्युतानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि।

रजतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।

परुषाणाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि।

श्यामानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।
कपिलानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।
अतिलोहितानाꣳ रुद्राणाꣳ स्थाने स्वतेजसाभानि।
ऊर्द्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसाभानि।[७०]

अवपतन्तानाꣳ रुद्राणाꣳ स्थानेस्वतेजसा भानि।
वैद्युतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।
प्रभ्राजमानीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसाभानि।
व्यवदातीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि।
वासुकिवैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि।
रजतानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि।

परुषाणा ँ रुद्राणीना ँ स्थाने स्वतेजसाभानि।

श्यामाना ँ रुद्राणीना ँ स्थाने स्वतेजसाभानि।

कपिलाना ँ रुद्राणीना ँ स्थानेस्वतेजसाभानि।

अतिलोहितीना ँ रुद्राणीना ँ स्थानेस्वतेजसा भानि।

ऊर्ध्वाना ँ रुद्राणीना ँ स्थाने स्वतेजसा भानि।

अवपतन्तीना ँ रुद्राणीना ँ स्थानेस्वतेजसा भानि।

वैद्युतीना ँ रुद्राणीना ँ स्थाने स्वतेजसा भानि।

ओं भूर्भुवस्स्वः। रूपाणि वो मिथुनं मा नो मिथुन ँ रीढ्वम्।। [७१]।।*(ऊर्ध्वाना ँ रुद्राणा ँ स्थाने स्वतेजसा भान्यतिलोहितीना ँ रुद्राणीना ँ स्थाने स्वतेजसा भानि पञ्च च)।।*

१८ अथाग्नेरष्टपुरुषस्य।

अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भानि।

जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि।

सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजसा भानि।

अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि।

वैश्वानरस्यापरदिश्यस्य स्थाने स्वतेजसा भानि।

नर्यापस उपदिश्यस्य स्थाने स्वतेजसा भानि।

पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि।

विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि।
ओं भूर्भुवस्स्वः। दिशो वो मिथुनं मा नो
मिथुनꣳ रीढ्वम्। [७२]।। (स्वरेकञ्च)।।

१९ दक्षिणपूर्वस्यान्दिशि विसर्पी
नरकः। तस्मान्नः परि पाहि।

दक्षिणापरस्यान्दिश्यविसर्पी नरकः।
तस्मान्नः परिपाहि।

उत्तरपूर्वस्यान्दिशि विषादी नरकः।
तस्मान्नः परि पाहि।

उत्तरापरस्यान्दिश्यविषादी नरकः। तस्मान्नः परिपाहि।

आयस्मिन्थ्सप्त वासवा इन्द्रियाणि शतक्रतवित्येते।।[७३]।।(दक्षिणपूर्वस्या-न्नव)।।

२० इन्द्रघोषा वो वसुभिः पुरस्तादुपदधताम्। मनोजवसो वः पितृभिर्दक्षिणत उपदधताम्। प्रचेता वो रुद्रैः पश्चादुपदधताम्। विश्वकर्मा व आदित्यैरुत्तरत उपदधताम्। त्वष्टा वो रूपैरुपरिष्टा-

दुपदधताम्। संज्ञानव्वः पश्चादिति। आदित्य स्सर्वोऽग्निः पृथिव्याम्। वायुरन्तरिक्षे। सूर्यो दिवि। चन्द्रमा दिक्षु। नक्षत्राणि स्वलोके। एवाह्येव। एवाह्यग्ने। एवाहि वायो। एवाहीन्द्र। एवाहि पूषन्। एवाहि देवाः।। [७४]।। *(दिक्षु सप्त च)।।*

२१ आपमापामपस्सर्वाः। अस्मादस्मादितोऽमुतः। अग्नि र्वायुश्च सूर्यश्च। सहसञ्चस्करर्द्धिया। वाय्वश्वा रश्मि पतयः। मरीच्यात्मानो अद्रुहः।

देवी र्भुवन सूवरीः। पुत्रवत्त्वाय मे सुत। महानाम्नी र्महामानाः। महसो महसस्स्वः। [७५]।।

देवीः पर्जन्य सूवरीः। पुत्रवत्त्वाय मे सुत। अपाश्न्युष्णिमपा रक्षः। अपाश्न्युष्णि-मपा रघम्। अपाघ्रामप चावर्तिम्। अपदेवी-रितोहित। वज्रन्देवीरजीताँ श्च। भुवनन्देव सूवरीः। आदित्यानदितिन्देवीम्। योनिनो-र्दूर्ध्वमुदीषत। [७६]।।

भद्रङ्कर्णेभि श्शृणुयाम देवाः।

भद्रं पश्येमाक्षभि र्यजत्राः। स्थिरैरङ्गै स्तुष्टुवाꣳ संस्तनूभिः। व्यशेम देवहितय्यँदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पति र्दधातु। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳ शतधा हि। समाहितासो सहस्रधायसम्। शिवा नश्शन्तमाभवन्तु। दिव्या आप ओषधयः। सुमृडीका सरस्वति। मा ते व्योम सन्दृशि।[७७]।।*(स्वरुदीषत वातरशना षट्च।।)*

२२ योऽपां पुष्पव्वेँद। पुष्पवान् प्रजावान्पशुमान्भवति। चन्द्रमा वा अपां पुष्पम्। पुष्पवान्प्रजावान् पशुमान् भवति। य एवव्वेँद। योऽपामायतन व्वेँद। आयतनवान् भवति। अग्निर्वा अपामायतनम्। आयतनवान्भवति। योऽग्नेरायतन व्वेँद।

[७८]

आयतनवान्भवति। आपो वा अग्नेरायतनम्। आयतनवान्भवति। य एवव्वेँद।

योऽपामायतन ँव्वेद। आयतनवान् भवति। वायुर्वा अपामायतनम्। आयतनवान्भवति। यो वायोरायतन ँव्वेद। आयतनवान्भवति। [७९]।।

आपो वै वायोरायतनम्। आयतनवान्भवति। यएवँव्वेद। योऽपामायतनँव्वेद। आयतनवान् भवति। असौ वै तपन्नपामायतनम्। आयतनवान्भवति। योऽमुष्य तपत आयतनँव्वेद। आयतनवान्भवति। आपो वा अमुष्य तपत आयतनम्। [८०]।।

आयतनवान्भवति। य एवव्वँद। योऽपामायतन व्वँद। आयतनवान् भवति। चन्द्रमा वा अपामायतनम्। आयतनवान्भवति। यश्चन्द्रमस आयतन व्वँद। आयतन्वान्भवति। आपो वै चन्द्रमस आयतनम्। आयतनवान्भवति। [८१]।।

य एवव्वँद। योऽपामायतनव्वँद। आयतनवान्भवति। नक्षत्राणि वा अपामायतनम्। आयतनवान्भवति। यो नक्षत्राणा-मायतनव्वँद। आयतनवान्भवति। आपो वै

नक्षत्राणामायतनम्। आयतनवान्भवति। य एवव्वँद। [८२]।।

योऽपामायतनव्वँद। आयतनवान्भवति। पर्जन्यो वा अपामायतनम्। आयतनवान्भवति। यः पर्जन्यस्यायतनव्वँद। आयतनवान्भवति। आपो वै पर्जन्यस्यायतनम्। आयतनवान्भवति। य एवव्वँद। योऽपामायतनव्वँद। [८३]।।

आयतनवान्भवति। सव्वँथ्सरो वा अपामायतनम्। आयतनवान्भवति।

य-स्सव्वँथ्सरस्यायतन-व्वँद। आयतनवा-न्भवति। आपो वै सव्वँथ्सरस्यायतनम्। आयतनवान्भवति। य एवव्वँद। योऽफ्सु नावं प्रतिष्ठिता व्वँद। प्रत्येव तिष्ठति। [८३]।।

इमे वै लोका अफ्सु प्रतिष्ठिताः। तदेषाऽभ्यनूक्ता। अपाꣳ रसमुदयꣳ सन्न्। सूर्ये शुक्रꣳ समाभृतम्। अपाꣳ रसस्य यो रसः। तव्वो गृह्णाम्युत्तममिति। इमे वै लोका अपाꣳ रसः। तेऽमुष्मिन्नादित्ये समाभृताः।

जानुदघ्नीमुत्तरवेदीङ्खात्वा। अपां पूरयित्वा गुल्फदघ्नम्। [८५]।।

पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सꣳस्तीर्य। तस्मिन्विहायसे। अग्निं प्रणीयोप समाधाय। ब्रह्मवादिनो वदन्ति। कस्मात्प्रणी-तेयमग्निश्चीयते। सा प्रणीतेऽयमप्सु ह्यय-ञ्चीयते। असौ भुवनेप्यनाहिताग्निरेताः। तमभित एता अबीष्टका उपदधाति। अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु। [८६]।।

अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। एतद्धस्म वा आहु श्शण्डिलाः। कमग्निञ्चिनुते। सत्रियमग्निञ्चिन्वानः। सव्वँथ्सरं प्रत्यक्षेण। कमग्निञ्चिनुते। सावित्रमग्निञ्चिन्वानः। अमुमादित्यं प्रत्यक्षेण। कमग्निञ्चिनुते। [८७]।।

नाचिकेतमग्निञ्चिन्वानः। प्राणान् प्रत्यक्षेण। कमग्निञ्चिनुते। चातुर्होत्रियमग्निञ्चिन्वानः। ब्रह्म प्रत्यक्षेण। कमग्निञ्चिनुते। वैश्वसृजमग्निञ्चिन्वानः।

शरीरं प्रत्यक्षेण। कमग्निञ्चिनुते।
उपानुवाक्यमाशुमग्निञ्चिन्वानः। [८८]।।
इमाल्लोँकान्प्रत्यक्षेण। कमग्निञ्चिनुते।
इममारुण-केतुक-मग्निञ्चिन्वान इति।
य एवासौ। इतश्चामुतश्चाव्यतीपाती।
तमिति। योऽग्ने मिथूया वेद।
मिथुनवान्भवति। आपो वा अग्ने मिथूयाः।
मिथुनवान्भवति। य एवव्वेँद।।[८९]।।

*(वेद भवत्या-यतनमा-यतनवान्भवति य एवव्वेँद वेद तिष्ठति गुल्फदघ्न-ञ्चातुर्मास्येष्व-मुमादित्यं प्रत्यक्षेण कमग्निञ्चिनुत उपानुवाक्यमाशुमग्निञ्चिन्वानो मिथूया मिथुनवान्भवत्येकञ्च)।।*

२३ आपो वा इदमासन्थ्सलिलमेव। स प्रजापतिरेकः पुष्करपर्णे समभवत्। तस्यान्तर्मनसि कामस्समवर्तत। इद ँ सृजेयमिति। तस्माद्यत्पुरुषो मनसाऽभिगच्छति। तद्वाचा वदति। तत्कर्मणा करोति। तदेषाऽभ्यनूक्ता। कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमय्यँदासीत्। [९०]॥

सतो बन्धुमसति निरविन्दन्न्। हृदि प्रतीष्या कवयो मनीषेति। उपैनन्तदुपनमति। यत्कामो भवति। यएवव्वँद। सतपोऽतप्यत।

स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मा꣡ꣳस-मासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्न्। [९१]।।

ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूतꣳ सर्पन्तम्। तमब्रवीत्। मम वै त्वङ्माꣳसा। समभूत्। [९२]।।

नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्षस्सहस्रपात्। भूत्वोदतिष्ठत्।

तमब्रवीत्। त्वव्ँवै पूर्वँसमभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः।[९३]।।

**अञ्जलिना** पुरस्तादुपादधात्। एवाह्येवेति। तत आदित्य उदतिष्ठत्। सा प्राची दिक्। अथारुणःकेतु र्दक्षिणत उपादधात्। एवाह्यग्न इति। ततो वा अग्निरुदतिष्ठत्। सा दक्षिणादिक्। अथारुणःकेतुः पश्चादुपादधात्। एवा हि वायो इति। [९४]।।

ततो वायुरुदतिष्ठत्। सा प्रतीची दिक्। अथारुणःकेतुरुत्तरत उपादधात्।

एवाहीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथारुणः केतुर्मद्ध्य उपादधात्। एवाहि पूषन्निति। ततो वै पूषोद-तिष्ठत्। सोयन्दिक्। [९५]।।

अथारुणःकेतुरुपरिष्टादुपादधात्।

एवाहि देवा इति। ततो देवमनुष्याः पितरः। गन्धर्वाप्सरसश्चोदतिष्ठन्न्। सोद्ध्वादिक्। या विप्रुषो विपरापतन्न्। ताभ्योऽसुरा रक्षाँसि पिशाचाश्चोदतिष्ठन्न्। तस्मात्ते पराभवन्न्। विप्रुड्भ्यो हि ते समभवन्न्।

तदेषाऽभ्यनूक्ता। [९६]।।

आपो ह यद्बृहती गर्भमायन्न्।
दक्षन्दधाना जनयन्ती स्स्वयंभुम्। तत इमेऽ
द्ध्यसृज्यन्त सर्गाः। अद्भ्यो वा इद ँ
समभूत्। तस्मादिद ँ सर्वं ब्रह्मस्वयँभ्विति।
तस्मादिद ँ सर्व ँ शिथिलमिवाद्ध्रुवमिवा-
भवत्। प्रजापतिर्वाव तत्। आत्मनाऽऽत्मान-
ंव्विँधाय। तदेवानु प्राविशत्। तदेषाऽभ्यनूक्ता।
[९७]।।

विधाय लोकान् विधाय भूतानि।

विधाय सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्य। आत्मनाऽऽत्मान-मभि संविवेशेति। सर्वमेवेदमाप्त्वा। सर्वमवरुद्ध्य। तदेवानु प्रविशति। य एव व्वेद।। [९८]।।

*(आसीदतिष्ठन्नभूदपो वायो इति सेयन्दिगभ्य नूक्ताऽभ्यनूक्ताष्टौ च)।।*

**२४ चतुष्टय्य** आपोगृह्णाति। चत्वारि वा अपाँ रूपाणि। मेघो विद्युत्। स्तनयित्नुर्वृष्टिः। तान्येवावरुन्धे। **आतपति वर्ष्यागृह्णाति।** ताः पुरस्तादुपदधाति।

एता वै ब्रह्मवर्चस्या आपः। मुखत एव ब्रह्मवर्चसमवरुन्धे। तस्मान्मुखतोब्रह्म-वर्चसितरः। [९९]।।

**कूप्या गृह्णाति** । ता दक्षिणत उपदधाति। एता वै तेजस्विनीरापः। तेज एवास्य दक्षिणतो दधाति। तस्माद्दक्षिणोऽर्द्ध-स्तेजस्वितरः। **स्थावरा गृह्णाति**। ताः पश्चादुपदधाति। प्रतिष्ठिता वै स्थावराः। पश्चादेव प्रतितिष्ठति। **वहन्तीर्गृह्णाति**। [१००]।।

ता उत्तरत उपदधाति। ओजसा वा एता वहन्तीरिवोद्गतीरिव आकूजतीरिव धावन्तीः। ओज एवास्योत्तरतो दधाति। तस्मादुत्तरोऽर्द्ध ओजस्वितरः। **संभार्या गृह्णाति**। ता मद्ध्य उपदधाति। इयव्वै संभार्याः। अस्यामेव प्रतितिष्ठति। **पल्वल्या गृह्णाति**। ता उपरिष्टादुपादधाति।[१०१]।।

असौ वै पल्वल्याः। अमुष्यामेव प्रतितिष्ठति। **दिक्षूपदधाति**। दिक्षुवा आपः। अन्नव्वाँ आपः। अद्भ्यो वा अन्नञ्जायते।

यदेवाद्भ्योऽन्नञ्जायते। तदवरुन्धे। तव्वाँ एतमरुणाःकेतवो वातरशना ऋषयोऽचिन्वन्। तस्मादारुणकेतुकः। [१०२]।।

तदेषाऽभ्यनूक्ता। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाᳪं शतधाहि। समाहितासो सहस्रधायसमिति। शतशश्चैव सहस्रशश्च प्रतितिष्ठति। य एतमग्निञ्चिनुते। य उ चैनमेवव्वेद।। [१०३]।।

*(ब्रह्मवर्चसितरो वहन्तीर्गृह्णाति ता उपरिष्टा दुपादधात्यारुणकेतुकोऽष्टौ च)।।*

२५ जानुदघ्नीमुत्तरवेदीङ्खात्वा। अपां पूरयति। अपाꣳसर्वत्त्वाय। पुष्करपर्णꣳ रुक्मं पुरुषमित्युपदधाति। तपो वै पुष्करपर्णम्। सत्यꣳ रुक्मः। अमृतं पुरुषः। एतावद्वावास्ति। यावदेतत्। यावदेवास्ति। [१०४]।।

तदवरुन्धे। कूर्ममुपदधाति। अपामेव मेधमवरुन्धे। अथो स्वर्गस्य लोकस्य समष्ट्यै। आपमापामपस्सर्वाः। अस्मादस्मा-दितोऽमुतः। अग्निर्वायुश्च सूर्यश्च।

सहसञ्चस्करर्द्धिया इति। वाय्वश्वा रश्मि पतयः। लोकं पृणच्छिद्रं पृण। [१०५]।।

यास्तिस्त्रः परमजाः। इन्द्रघोषावो वसुभिरेवाह्येवेति। पञ्चचितय उपदधाति। पाङ्क्तोऽग्निः। यावानेवाग्निः। तञ्चिनुते। लोकं पृणया द्वितीयामुपदधाति। पञ्चपदा वै विराट्। तस्या वा इयं पादः। अन्तरिक्षं पादः। द्यौः पादः। दिशः पादः। परोरजाः पादः। विराज्येव प्रतितिष्ठति। य एतमग्नि - ञ्चिनुते। य उ चैनमेवव्वेँद।।[१०६]।।

(अस्तिपृणान्तरिक्षं पादष्षट्च)।। ०-०-०

२६ अग्निं प्रणीयोपसमाधाय। तमभित एता अबीष्टका उपदधाति। अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु। अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। अथ हस्माहारुण स्स्वायंभुवः। सावित्र स्सर्वोऽग्निरित्यननुषङ्गं मन्यामहे। नाना वा एतेषाव्वीर्याणि। कमग्निञ्चिनुते। [१०७]।।

सत्रियमग्निञ्चिन्वानः। कमग्निञ्चिनुते। सावित्रमग्निञ्चिन्वानः। कमग्निञ्चिनुते। नाचिकेतमग्निञ्चिन्वानः। कमग्निञ्चिनुते। चातुर्होत्रियमग्निञ्चिन्वानः। कमग्निञ्चिनुते। वैश्वसृजमग्निञ्चिन्वानः। कमग्निञ्चिनुते। [१०८] ।।

उपानुवाक्यमाशु-मग्नि-ञ्चिन्वानः। कमग्निञ्चिनुते। इममारुणकेतुकमग्निञ्चिन्वान इति। वृषा वा अग्निः। वृषाणौ सꣳस्फालयेत्। हन्येतास्य यज्ञः।

तस्मान्नानुषज्यः। सोत्तरवेदिषु क्रतुषु चिन्वीत। उत्तरवेद्या ँ ह्यग्निश्चीयते। **प्रजाकाम-श्चिन्वीत**। [१०९]।।

प्राजापत्यो वा एषोऽग्निः। प्राजापत्याः प्रजाः। प्रजावान्भवति। य एवव्वेँद। **पशुकामश्चिन्वीत**। संज्ञानव्वाँ एतत्पशूनाम्। यदापः। पशूनामेव संज्ञानेऽग्निञ्चिनुते। पशुमान्भवति। य एवव्वेँद। [११०]।।

वृष्टिकामश्चिन्वीत। आपोवै वृष्टिः। पर्जन्यो वर्षुको भवति। य एवव्वेँद।

आमयावी चिन्वीत। आपो वै भेषजम्। भेषजमेवास्मै करोति। सर्वमायुरेति। अभिचरꣳश्चिन्वीत। वज्रो वा आपः। [१११]

वज्रमेव भ्रातृव्येभ्यः प्रहरति। स्तृणुत एनम्। तेजस्कामो यशस्कामः। ब्रह्मवर्चस कामस्स्वर्गकामश्चिन्वीत। एतावद्वावास्ति। यावदेतत्। यावदेवास्ति। तदवरुन्धे। तस्यैतद्व्रतम्। वर्षति न धावेत्। [११२]।।

## ८४

अमृत व्वाँ आपः। अमृतस्यानन्तरित्यै। नाफ्सु मूत्र पुरीषङ्कुर्यात्। न निष्ठीवेत्। न विवसन स्स्नायात्। गुह्यो वा एषोऽग्निः। एतस्याग्नेरनतिदाहाय। न पुष्करपर्णानि हिरण्यव्वाँऽधितिष्ठेत्। एतस्याग्नेरनभ्यारोहाय। न कूर्मस्याश्नीयात्। नोदकस्या-घातुका-न्येन-मोदकानि भवन्ति। अघातुका आपः। य एतमग्निञ्चिनुते। य उ चैनमेवव्वेद।।

[११३]

*(चिनुते चिनुते प्रजाकामश्चिन्वीत य एवव्वेदापो वेदश्नीयाच्चत्वारि च)।।*

२७ इमा नुकं भुवना सीषधेम। इन्द्रश्च विश्वे च देवाः। यज्ञञ्च नस्तन्वञ्च प्रजाञ्च। आदित्यैरिन्द्र स्सह सीषधातु। आदित्यैरिन्द्र स्सगणो मरुद्भिः। अस्माकं भूत्ववविता तनूनाम्। आप्लवस्व प्रप्लवस्व। आण्डी भव ज मा मुहुः। सुखादीन्दुःख निधनाम्। प्रतिमुञ्चस्व स्वां पुरम्। [११४]।

मरीचय स्स्वायंभुवाः। ये शरीराण्य-कल्पयन्न्। ते ते देहङ्कल्पयन्तु। मा च ते ख्या स्म तीरिषत्। उत्तिष्ठत मा स्वप्त।

अग्निमिच्छद्ध्वं भारताः। राज्ञ स्सोमस्य तृप्तासः। सूर्येण सयुजोषसः। युवा सुवासाः। अष्टाचक्रा नवद्वारा। [११५]।।

देवानां पूरयोद्ध्या। तस्याँ हिरण्मयः कोशः। स्वर्गो लोको ज्योतिषाऽऽवृतः। यो वैतां ब्रह्मणो वेद। अमृतेनावृतां पुरीम्। तस्मै ब्रह्मच ब्रह्माच। आयुःकीर्तिं प्रजान्ददुः। विभ्राजमानाँ हरिणीम्। यशसा संपरीवृताम्। पुरँ हिरण्मयीं ब्रह्मा। [११६]।।

विवेशापराजिता। पराङेत्यज्यामयी।

पराङेत्यनाशकी। इह चामुत्र चान्वेति।
विद्वान्देवासुरानुभयान्। यत्कुमारी मन्द्रयते।
यद्योषिद्यत्पतिव्रता। अरिष्ट-य्यँत्किञ्च
क्रियते। अग्निस्तदनु वेधति। अशृतास
श्शृतासश्च। [११७] ।।

यज्वानो येऽप्ययज्वनः। स्वर्यन्तो
नापेक्षन्ते। इन्द्रमग्निञ्च ये विदुः। सिकता
इव सय्यँन्ति। रश्मिभि स्समुदीरिताः।
अस्मा-ल्लोका-दमुष्माच्च। ऋषिभिरदात्
पृश्निभिः। अपेत वीत वि च सर्पतातः।

येऽत्रस्थ पुराणा ये च नूतनाः। अहोभिरद्भि-रक्तुभि-र्व्यक्तम्। [११८]।।

यमो ददात्ववसानमस्मै। नृमुणन्तु नृपात्वर्यः। अकृष्टा ये च कृष्टजाः। कुमारीषु कनीनीषु। जारिणीषु च ये हिताः। रेतः पीता आण्डपीताः। अङ्गारेषु च ये हुताः। उभयान्पुत्र पौत्रकान्। युवेऽह-य्यँमराजगान्। शतमिन्नु शरदः। [११९]।।

अदो यद्ब्रह्मविलबम्। पितृणाञ्च यमस्य च। वरुणस्याश्विनोरग्नेः। मरुताञ्च

विहायसाम्। कामप्रयवणं मे अस्तु।
सह्येवास्मिं सनातनः। इति नाको ब्रह्मिश्रवो
रायो धनम्। पुत्रानापो देवीरिहाहिता।[१२०]।

*(पुरन्नवद्वारा ब्रह्मा च व्यक्तᳪशरदोऽष्टौ च)*

२८ विशीर्ष्णीङ्-गृध्रशीर्ष्णीञ्च। अपेतो निरृ॒ति॑ꣳहथः। परिबाधꣳश्वेत-कुक्षम्। निजङ्घꣳ शबलोदरम्। स-तान् वाच्यायया सह। अग्ने नाशय सन्दृशः। ईर्ष्यासूये बुभुक्षाम्। मन्युङ्कृत्याञ्च दीधिरे। रथेन किꣳशुकावता। अग्ने नाशय सन्दृशः। [१२१]॥

**२९** पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु। इदव्वँचः पर्जन्याय स्वराजे। हृदो अस्त्वन्तरन्तद्युयोत। मयोभूर्वातो विश्वकृष्टय स्सन्त्वस्मे। सुपिप्पला ओषधी र्देवगोपाः। यो गर्भ-मोषधीनाम्। गवाङ्कृणोत्यर्वताम्। पर्जन्यः पुरुषीणाम्। [१२२]।। *(विशीर्ष्णी पर्जन्याय दश दश)*।।

३० पुनर्मामैत्विन्द्रियम्। पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मा। पुनर्द्रविणमैतु मा। यन्मेऽद्यरेतः पृथिवीमस्कान्। यदोषधीरप्यसरद्यदापः। इदन्तत्पुनराददे। दीर्घायुत्वाय वर्चसे। यन्मे रेतः प्रसिच्यते। यन्म आजायते पुनः। तेन माममृतङ्कुरु। तेन सुप्रजसङ्कुरु॥ [१२३]॥ *(पुनर्द्वे च)*॥

३१ अद्भ्यस्तिरोधाजायत। तव वैश्रवणस्सदा। तिरोधेहि सपत्नान्नः। ये अपोऽश्नन्ति केचन। त्वाष्ट्रीं मायाँ वैश्रवणः। रथꣳसहस्रवन्धुरम्। पुरुश्चक्रꣳ सहस्राश्वम्। आस्थायायाहि नो बलिम्। यस्मै भूतानि बलिमावहन्ति। धनङ्गावो हस्ति हिरण्यमश्वान्। [१२४]।।

असाम सुमतौ यज्ञियस्य। श्रियं बिभ्रतोऽन्नमुखी व्विँराजम्। सुदर्शने च क्रौञ्चे च। मैनागे च महागिरौ।

सतद्धाट्टार गमन्ता। स॒ँहार्यन्नगरन्तव। इति मन्त्राः। कल्पोऽत ऊ॒र्द्ध्वम्। यदि बलिँ हरेत्। हिरण्यनाभये वितुदये कौबेरायायं बलिः। [१२५]।।

सर्वभूताधिपतये नम इति। अथ बलिँ हृत्वोपतिष्ठेत। क्षत्रङ्क्षत्रव्वैँश्रवणः। ब्राह्मणा वयँ स्मः। नमस्ते अस्तु मा मा हिँ सीः। अस्मात्प्रविश्यान्नमद्धीति। अथ तमग्निमादधीत। यस्मिन्नेतत्कर्म प्रयुञ्जीत। तिरोधा भूः। तिरोधा भुवः। [१२६]।।

तिरोधास्स्वः। तिरोधा भूर्भुवस्स्वः। सर्वेषा-ल्लौँकाना-माधिपत्ये सीदेति। अथ तमग्निमिन्धीत। यस्मिन्नेतत्कर्म प्रयुञ्जीत। तिरोधा भूस्स्वाहा। तिरोधा भुवस्स्वाहा। तिरोधा-स्स्व-स्स्वाहा। तिरोधा भूर्भुव-स्स्व-स्स्वाहा। यस्मिन्नस्य काले सर्वा आहुतीर्हुता भवेयुः। [१२७]।।

अपि ब्राह्मणमुखीनाः। तस्मिन्नह्नः काले प्रयुञ्जीत। परस्सुप्तजनाद्वेपि। मास्म प्रमाद्यन्त-माद्ध्यापयेत्। सर्वार्थास्सिद्ध्यन्ते।

य एवव्ँवेद। क्षुद्ध्य-न्निद-मजानताम्। सर्वार्था न सिद्ध्यन्ते। यस्ते विघातुको भ्राता। ममान्तर् हृदये श्रितः। [१२९] ।।

तस्मा इममग्र-पिण्ड-ञ्जुहोमि। स मेऽर्थान्मा विवधीत्। मयि स्वाहा। राजाधिराजाय प्रसह्य साहिने। नमो वय-व्वँश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय। महाराजाय नमः। केतवो अरुणासश्च। ऋषयो वातरशनाः।

प्रतिष्ठा ँ शतधाहि। समाहितासो सहस्रधा-
यसम्। शिवान-श्शन्तमाभवन्तु। दिव्या आप
ओषधयः। सुमृडीका सरस्वति। माते व्योम
सन्दृशि।। [१२९]।। *अश्वान्बलि-र्भुवो*
*भवेयु-श्श्रितश्च सप्त च)।।*

**३१** सव्वँथ्सरमेतद्व्रतञ्चरेत्। द्वौ
वा मासौ। नियमस्समासेन। तस्मिन्नियम
विशेषाः। त्रिषवण-मुदकोपस्पर्शी।
चतुर्थकालपानभक्त-स्स्यात्। अहरहर्वा भैक्ष-
मश्नीयात्। औदुंबरीभिस्समिद्भि-रग्निं

परिचरेत्। पुन-र्मामैत्विन्द्रिय-मित्येतेनानुवाकेन। उद्धृत परिपूताभि-रद्भिः कार्यङ्कुर्वीत। [१३०]।।

असञ्चयवान्। अग्नये वायवे सूर्याय। ब्रह्मणे प्रजापतये। चन्द्रमसे नक्षत्रेभ्यः। ऋतुभ्य-स्सवँथ्सराय। वरुणायारुणायेति व्रतहोमाः। प्रवर्ग्यवदादेशः। अरुणाः काण्ड ऋषयः। अरण्येऽधीयीरन्न्। भद्रङ्कर्णेभिरिति द्वे जपित्वा। [१३१]।।

**महानाम्नीभि-** रुदकꣳसꣳस्पृश्य।

## ९९

तमाचार्यो दद्यात्। शिवा न श्शन्तमेत्योषधी-
रालभते। सुमृडीकेति भूमिम्। एवमपवर्गे।
धेनु र्दक्षिणा। कꣳ सव्वाँसश्च क्षौमम्।
अन्यद्वा शुक्लम्। यथा शक्ति वा। एवꣳ-
स्वाद्ध्याय धर्मेण। अरण्येऽधीयीत।
**तपस्वीपुण्यो भवति तपस्वीपुण्योभवति।।**
[१३२]।।*(कुर्वीत जपित्वा स्वाद्ध्याय धर्मेण द्वेच)*।।

**भद्रं.....दधातु।**

**ओं शान्तिश्शान्तिश्शान्तिः।।**

**।।हरिः ओ(३)म्।।**

भानो भास्कर मार्ताण्ड चण्डरश्मे दिवाकर।
आयुरारोग्यमैश्वर्यं श्रियं पुत्रांश्च देहि मे।।

धृतपद्मद्वयं भानुं तेजोमण्डल मध्यगम्।
सर्वाऽऽधिव्याधि शमनं छायाश्लिष्टतनुं भजे।

सौरमण्डल मद्ध्यस्थं साम्बं संसार भेषजम्।
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम्।।

*छायासुवर्चलाम्बा समेत श्रीसूर्यनारायणस्वामिने नमः।।*

।।शुभम्।।

# ।।सूर्य आर्या द्वादश स्तुति।।

उद्यन्नद्य विवस्वानारोहन्नुत्तरान्दिवन्देवः।

हृद्रोगं मम सूर्यो हरिमाणञ्चाशु नाशयति।।१।।

*उद्यन्नद्यमित्रमहः। ओं ह्रां मित्राय नमः।।*

निमिषार्धेनैकेन द्वे च शते द्वे तथा सहस्रे च।

क्रममाण योजनानां नमोऽस्तु ते नळिन नाथाय।।२।।

*आरोहन्नुत्तरान्दिवम्। ओं ह्रीं रवये नमः।।*

शिवरूपात् ज्ञानमहं त्वत्तो मुक्तिं जनार्दनाकारात्।

शिखिरूपाच्चैश्वर्यं भवतश्चारोग्यमिच्छामि।।३।।

*हृद्रोगं मम सूर्य। ओं ह्रूं सूर्याय नमः।।*

कर्म ज्ञान ख दशकं नभश्च जीव इति विश्वसर्गाय।

द्वादशधा यो विचरति स द्वादशमूर्तिरस्तु मुदे।।४।।

*हरिमाणं च नाशय। ओं ह्रैं भानवे नमः।।*

# ।।सूर्य आर्या द्वादश स्तुति।।

त्वं यजुर् ऋक्साम त्वं आगमस्त्वं वषट्कारः।
त्वं विश्वस्त्वं हंसस्त्वं भानुः परम हंशश्च (५)
*शुकेषु मे हरिमाणम्। ओं ह्रौं खगाय नमः।।*

त्वचिदोषा दृशि दोषाः हृदिदोषाः येऽखिलेन्द्रियगदोषाः।
तान्पूषा हत दोषान् ईषत् रोषाग्निना दहतु।।६।।
*रोपणाकासु दध्मसि। ओं ह्रः पूष्णे नमः।।*

तिमिरमिव नेत्र तिमिरं पटलमिवाशेष रोगं च।
काचमिव धीनिकोचम् कालपिता मम निराकुर्यात्।।७।।
*अथो हारिद्रवेषु मे। ओं ह्रां हिरण्यगर्भाय नमः।।*

धर्मार्थ काममोक्ष प्रतिरोधिन उग्रवेग तापकरान्।
मन्दीकृतेन्द्रिय गणान् गदान्विनाशयतु चण्डांशुः।। ८।।
*हरिमाणन्निदध्मसि। ओं ह्रीं मरीचये नमः।।*

येन विनाऽन्धं तिमिरं जगदेतत् यत्र सत्ति धृतबोधम्।
तन्नळिनीभर्तारं हर्तारं चापदामीडे।। ९।।
*उदगादयमादित्यः। ओं ह्रूं आदित्याय नमः।।*

# ।।सूर्य आर्या द्वादश स्तुति।।

यस्य सहस्राभीशो अभीशुलेशो हिमांशु बिंबगतः।
भासयति नक्तमखिलं खिलयतु सविपद्गणानखिलान्।।१०।।
*विश्वेन सहसा सह। ओं हैं सवित्रे नमः।।*

वाताश्मरि दुर्नाम त्वग्दोष महोदर प्रमेहांश्च।
गृहणी भगन्दर मुखान् महारुजोऽपि त्वं इन हरसि।। ११।।
*द्विषन्तं मम रन्धयन्न्। ओं हौं अर्काय नमः।।*

त्वं शरणं त्वं माता त्वं च पिता त्वं धनं त्वमाचार्यः।
त्वं त्राता त्वं हर्ता विपदां अर्क प्रसीद मम।। १२।।
*मो अहं द्विषतो रधम्। ओं हः भास्कराय नमः।।*

मित्ररवि सूर्यभानु खगपूष हिरण्यगर्भ मरीच्यादित्य सवित्रर्क भास्करेभ्यो नमो नमः।।

इत्यार्या द्वादशकं साम्बस्य पुरो नभस्थलात् पतितम्।
पठतां भाग्य समृद्धिः सर्वरोगक्षयश्च स्यात्।।

।। शुभम् ।।